श्रीगणेशाय नमः ॥ उषसि मागधमंगलगायनैर्झटिति जागृहि जागृहि जागृहि ॥ अतिकृ-
पार्द्रकटाक्षनिरीक्षणैर्जगदिदं जगदंब सुखीकुरु ॥१॥ कनकमयवितर्दिशोभमाने दिशि-
शि पूर्णसुवर्णकुंभयुक्ते । मणिमयमंडपमध्यमेहि मातर्मयि कृपयाहि समर्चनं गृहीतुं ॥२॥
कनककलशशोभमानशीर्षं जलधरचुंबिसमुच्चसत्पताकं ॥ भगवति तव सन्निवासहेतोर्म-
णिमयमंदिरमेतदर्पयामि ॥३॥ तपनीयमयी समुत्तलिका मनीमृदुलोत्तरछदा ॥ नवरत्नविभू-
षिता मया शिविकेयं जगदंब तर्पिता ॥४॥ कनकमयवितर्दिस्थापिते तूलिकाढ्ये विविधकुसु-
मकीर्णे कोटिबालार्कवर्णे ॥ भगवति रमणीये रत्नसिंहासनेस्मिन्नुपविश पदयुग्मं हेमपीठे निधे-
हि ॥५॥ मणिमौक्तिकनिर्मितं महांतं कनकस्तंभचतुष्टयेन युक्तं ॥ कमनीयतमं भवानि तुभ्यं नवमुद्यो-
चमहं समर्पयामि ॥६॥ पूर्वया सरसिजान्वितविष्णुक्रांतया च सहितं कुसुमाद्यं ॥ पद्मयुग्मस-
दृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः ॥७॥ गंधपुष्पयवसर्षपदूर्वासंयुतं तिलकुशाक्ष

न्तमित्थं ॥७॥ हेमपात्रनिहितं ससरत्नैरर्घ्यमेतदुररीमाम ॥८॥ जलजद्युतिनांकरजातीफलकं
कोललवंगगंधयुक्तैः ॥ अमृतैरमृतैरिवातिशीतैर्भगवत्याचमनं निधीयतां ॥९॥ निहितं
कनकस्य संपुटे पिहितं रत्नपिधानकेन यत् ॥ तदिदं भगवतीकेरर्पितं मधुपर्कं जननि प्रगृह्य
तां ॥१०॥ एतच्चंपकतैलमंबविविधैः पुष्पैर्मुहुर्वासितं न्यस्तं रत्नमये सुवर्णचषके भृंगैर्भ्रमद्
भिर्वृतं ॥ सानंदं सुरसुन्दरीभिरभितो हस्ते धृतं तन्मया केशेषु भ्रमरभ्रमेषु सकलेष्वंगेषु
चालिप्यते ॥११॥ मातः कुंकुमपंकनिर्मितमिदं देहे तवोद्वर्तनं भक्त्याहं कलयामि हेमरजः
सासंमिश्रितं केसरं ॥ केशानामलकैर्विशोध्य विशदान्कस्तूरिकाद्युक्षितैः स्नानं ते नवरत्नकुं
भसहितैः संवासितोष्णोदकैः ॥१२॥ दधिदुग्धघृतैः समाक्षिकैः सितया शर्करया समन्वितैः ॥
स्नपयामि तवाहमादृतो जननि त्वां पुनरुष्णवारिभिः ॥१३॥ एलोशीरसुवासितैः सकुसुमैर्गंगा

५

२

दि तीर्थोदकैर्माणिक्यामत्रमौक्तिकामत्रयुतैः स्वच्छैः सुवर्णोदकैः ॥ मंत्रान्वैदिकतांत्रि
कान्परिपठन् सानंदमत्यादरात् स्नानं ते परिकल्पयामि जननि स्नेहात्वमंगीकुरु ॥१४॥
बालार्कद्युति दाडिमीयकुसुमप्रस्पर्द्धि सर्वोत्तमं मातस्त्वं परिधेहि दिव्यवसनं भक्त्या म
याकल्पितं ॥ मुक्ताभिर्ग्रथितं च कंचुकमिदं स्वीकृत्य पीतप्रभं तप्तस्वर्णसमानवर्णमत
तुलं प्रावर्णमंगीकुरु ॥१५॥ नवरत्नमये मयार्पिते कमनीये तपनीयपादुके ॥
सविलासमिदं पदद्वयं कृपया देवि तयोर्निधीयतां ॥१६॥ बहुभिरगरुधूपैः सादरं धूप
यित्वा भगवति तव केशान् कंकतैर्मार्जयित्वा ॥ सुरभिभिररविंदैश्चंपकैश्चार्चयित्वा झटिति कनकसूत्रैर्जू
टयन्वेष्टयामि ॥१७॥ सौवीरांजनमिदमंब चक्षुषोस्ते विन्यस्तं कनकशलाकया मयायत्नात्तन्न
नं मलिनमपि त्वदक्षिसंगाद्ब्रह्मेन्द्राद्यभिलषणीयतामियाय ॥१८॥ मंजीरान्पदयोर्निधाय रुचि
रान्विन्यस्य कांचीं कटौ मुक्ताहारमुरोजयोरनुपमां नक्षत्रमालां गले केयूराणि भुजेषु रत्नवलयाश्रेणीं क

२

17

साचिंतयेव॥२४॥मंदारकुंदकरवीरलवंगपुष्पैस्त्वांदेविसंततमहंपरिपूजयामि॥जातीय
पावकलचंपककेतकादिनानाविधानिकुसुमानिसमर्प्पितानि॥२५॥मालतीवकुलहेम
पुष्पिकाकांचनारकरवीरकेतकैः॥कर्णिकारगिरिकर्णिकादिभिःपूजयामिजगदंबतेवपुः॥ २६॥
पारिजातशतपत्रपाटलामल्लिकावकुलचंपकादिभिः॥अंबुजैश्चकुसुमैश्चसादरंपूजयामि
जगदंबतेवपुः॥२७॥लाक्षासंमिलितैःसिताभ्रसहितैःश्रीवाससंमिश्रितैःकर्पूराकुलितैः
सिंमधुयुतैर्गोसर्प्पिषालोडितैः॥श्रीखंडागुरुगुग्गुलप्रभृतिभिर्नानाविधैर्वस्तुभिर्धूपं
तेपरिकल्पयामिजननिस्नेहात्त्वमंगीकुरु॥२८॥रत्नालंकृतहेमपात्रनिहितैर्गोसर्प्पिषाद्दी
पितैर्दीपैर्दीर्घतरांधकारभिदुरैर्बालार्ककोटिप्रभैः॥आताम्रज्वलदुज्ज्वलप्रबलसद्रत्नप्रदी
पैस्तथामातस्त्वामहमादरादनुदिनंनीराजयाम्युच्चकैः॥२९॥मातस्त्वांदधिदुग्धपायसम

३ ला६ ३

करेषु क्रमान्नाटकेन तव कङ्कणान्याविनिदधे स्तीर्षे च चूडामणिं ॥१९॥ धम्मिल्ले तव देवि हेमकुसुमान्यापाय
भालस्थले मुक्ताराजिविराजिहेम तिलकं नासापुटे मौक्तिकं ॥ मातर्मौक्तिकजालिकां च कुचयोः
सर्वाङ्गुलीषूर्मिकाः कट्यां काञ्चनकिङ्किणीर्विनिदधे रत्नावतंसं श्रुतौ ॥२०॥ मातर्भालतले तवा
तिविमले काश्मीरकस्तूरिका कर्पूरागुरुभिः करोमि तिलकं देहे ऽङ्गरागं ततः । वक्षोजादिषु य
क्षकर्दमरसं सिक्त्वा च पुष्पद्रुतिं पादौ कुङ्कुमलेपनादिसहितैः संपूजयामि क्रमात् ॥२१॥ रत्नाक्ष
तैस्त्वां परिपूजयामि मुक्ताफलैर्वा रुचिरैरवद्धैः ॥ अखण्डितैर्देवि यवादिभिर्वा काश्मीरपङ्काङ्कित
तण्डुलैर्वा ॥२२॥ जननि चम्पकतैलमिदं पुरो मृगमदोपमयं पटवासकं ॥ सुरभिगन्धमयं च चतुःस
मं सपदि सर्वमिदं प्रतिगृह्यतां ॥२३॥ श्रीमन्त्रे ते भगवति मया सादरं न्यस्तमेतत्सिन्दूरं मे हृदयक
मले हर्षवर्षं तनोतु ॥ बालादित्यद्युतिरिव सदा लोहितायस्य कान्तिरन्तर्ध्वान्तं हरतु सकलं चेत

पुतैर्लवंगसहितैः कंकोलचूर्णान्वितैस्तुस्वादुक्रमुकैः सगौरखदिरैः सुस्निग्धजातीफलैः ॥ प्रातः
केतकपत्रपांडुरुचिभिस्तांबूलवल्लीदलैः स्वानंदं सुखमंबुनार्थमतुलं तांबूलमंगीकुरु ॥३७॥
एलालवंगादिसमन्वितानि कंकोलकर्पूरकमिश्रितानि ॥ तांबूलवल्लीदलमिश्रितानि
पूगानि नैवेद्यसमर्पयामि ॥३८॥ तांबूलवल्लीदलनिर्जितदेहमेव सौवर्णिकाक्रमपूगफलमौ
लिचूर्णयुक्तं ॥ एलास्यगिरिस्थितेनमिदंवदिरेण सार्द्धं तांबूलमेव वदनांबुरुहे गृहाण ॥३९॥
महितकनकपात्रे स्थापयित्वा विशालान् डमरुसदृशस्तपानांकगोधूमदीयान् ॥ बहुघृतम
यतेषु न्यस्यदीप्यानुकंपान् भुवनजननि कुर्वे नित्यमारार्तिकं ते ॥४०॥ सविनयमयद
त्ताजानुयुग्मं धरित्र्यां सपदिशिरसि धृत्वा पाणिमारार्तिकस्य ॥ मुखकमलसमीपे तेवसा
र्द्धं त्रिवारं भ्रमयति भयात्ते स्वपादः कटाक्ष ॥४१॥ अथ बहुमाणिक्यमिश्रैर्मौक्तिकैस्तांबि

हाशाल्यन्नसंयुतानि कान्सूपापूपक्षिताघृतैः सवटकैः संक्षौद्ररंभाफलैः ॥१९॥ जीरकहिंगु
नागरनिशाकुस्तुंबरीसंस्कृतैः ॥ शाकैः शाकमहं सुधाधिकरसैः संतर्पयाम्यंबिके ॥२०॥ सा
पूपसूपदधिदुग्धक्षिताघृतानि सुस्वादुभक्ष्यपरमान्नपुरःसराणि ॥ शाकोल्लसन्मरिचजीरक
बाह्लिकानि भक्ष्याभक्ष्य जगदंब मयार्पितानि ॥२१॥ क्षीरमेतदिदमुत्तमोत्तमं प्राज्यमाज्यमिदमुज्ज्व
लं मधु ॥ मातरेतदमृतोपमं त्वया संभ्रमेण परिपीयतां मुहुः ॥२२॥ उष्णोदकैः पाणियुगं मुखं
च प्रक्षाल्य मातः कलधौतपात्रे ॥ कर्पूरमिश्रेण स[illegible] कुंकुमेन हस्तौ समुद्वर्तय चंदनेन ॥
॥२३॥ अतिशीतमुशी[illegible]रवासितं तपनीयावपने निवेदितं ॥ पटपूतमिदं जितामृतं शुचिगंगा
जलमंबु पीयतां ॥२४॥ ताम्राम्ररंभाफलसंयुतानि द्राक्षाफलाक्षोटसमन्वितानि ॥ सवीज
पूराणि सजांबवानि फलानि ते देवि समर्पयामि ॥२५॥ कलिंगकोशातकसंयुतानि जंबीरना
रंगासमन्वितानि ॥ सनारिकेराणि सदाडिमानि फलानि देवि त्व समर्पयामि ॥२६॥ कर्पूरेण

लो

५

कनककलितघटः किंकिणीशोभिकंठः ॥ श्रवणयुगलचंचच्चामरो मेघतुल्यो जननि तव
मुदे स्यान्मत्तमातंगहस्तः ॥४६॥ कुलनरतुरगैर्विराजमानं मणिमयचक्रचतुष्टयेन युक्तं ॥ कनक
मयमिमं वितानवंतं भगवति ते हि रथं समर्पयामि ॥४७॥ हयगजरथपत्तिशोभमानं दिशि दिशि दुंदु
भिमेघनादयुक्तं ॥ अतिबहु चतुरंगमः सैन्यमेतत् भगवति भक्तिभरेण ते र्पयामि ॥५०॥ परिखीकृतस
प्तसागरं बहुसंपत्सहितं मयार्पितं ॥ विपुलं धरणीतलाभिधं प्रबलं दुर्गमिदं समर्पयामि ॥५१॥ शतपत्र
युतैः स्वभावशीतैः रतिसौरभ्ययुतैः परागपीतैः ॥ भ्रमरीमुखरीकृतैरनंतैर्व्यजनैस्त्वां जगदंब वीजयामि ॥
॥५२॥ भ्रमदलिकुललोलकुंतलाली विगलितमाल्यविकीर्णरंगभूमिः ॥ इयमतिरुचिरा नटी नटंती

सोलह४

तव हृदये मुदमातनोतु मातः ॥५३॥ मुखचलनविलासवेणीविलासितनिर्जितलोलभृंगमालाः ॥ युव
नकुचकातिचारुलीला भगवति ते पुरतो नटंति बालाः ॥५४॥ स्वचित्कु चन्नटीनां नाट्यकाले नटीनां प्र
तिरहमथ तत्र प्रादुरासीत् ॥ धिमिधिमि किटि धिमि धिमि धिमिद्धिमि धिमिद्धिमि धिमिद्धिमि धिमि किटि धिमि

५

तत्तथैथै थेयी थेयी ॥५५॥ भ्रमदलिकुलकुल्लालोलधम्मिल्लभारा स्मितमुखचपलो...

कीर्यं त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः मिलितविविधमुक्तां दिव्यलावण्ययुक्तां जननि कनकरचितं दक्षिणां तर्पयामि ॥४२॥ मातः काञ्चदंडमंडितमिदं पूर्णेन्दुबिंबप्रभं नानारत्नविशोभिहेममलं लोकत्रयाह्लादकं ॥ भास्वन्मौक्तिकजालसंपरिवृतं प्रीत्यात्महस्ते धृतं छत्रं ते परिकल्पयामि शिरसि त्वष्ट्रा स्वयं निर्मितं ॥४३॥ शरदिन्दुमरीचिगौरवर्णैर्मणिमुक्ताविलसत्सुवर्णदंडैः ॥ जगदंब विचित्रचामरैस्त्वामहमानंदभरेण वीजयामि ॥४४॥ मार्तंडमंडलनिभो जगदंब योयं भक्त्या मया मणिमयो मुकुरोर्पितस्ते ॥ पूर्णेंदुबिंबरुचिरं वदनं स्वकीयमस्मिन् विलोकय विलोलविलोचने त्वं ॥४५॥ इन्द्रादयो नतिनतैर्मुकुटप्रदीपैर्नीराजयंति सततं तव पादपीठं ॥ तस्मादहं तव समस्तशरीरमेतन्नीराजयामि जगदंब सहस्रदीपैः ॥४६॥ प्रियगतिरतितुंगो रत्नपल्याणयुक्तः कनकमयविभूषः स्निग्धगंभीरघोषः ॥ भगवति कलितोयं वाहनार्थं मया ते तुरगशतसमेतो वायुवेगस्तुरंगः ॥४७॥ मधुकरवृतकुंभन्यस्तसिंदूररेणु

दिव्यलावण्यपूर्णा ॥ अनुपमतनुशोभा वारयोषा नटन्ती परमतकलकंठी देवि धैर्यं धुनोतु ॥ ५६ ॥ डमरु
डिंडिमजर्झरझल्लरीमृदुरवद्रवडड्डुकवादकाः ॥ झटिति झांकृतिभिर्जगदंबिके मुहुरयं हृदयं सुखयन्तु ते ॥ ५७ ॥
विपंचिषु सप्तस्वरान्वादयंत्यस्तव द्वारि गायंति गंधर्वकन्याः ॥ क्षणं सावधानेन चित्तेन मातः समाकर्णि
यत्वं मया प्रार्थितासि प्रपञ्च्या ॥ अभिनवकमनीयैर्नर्तनैर्नर्तकीनां क्षणमथ रमयित्वा चेत एतत्त्वदीयं ।
स्वयमहमपि चित्रैर्नृत्यवादित्रगीतैर्भगवति भवदीयं मानसं रंजयामि ॥ ५९ ॥ तव देवि गुणानुवर्णने
चतुरा नो चतुराननादयः ॥ तदिहैकमुखेषु जंतुषु स्तवनं कस्तव कर्तुमीश्वरः ॥ ६० ॥ पदे पदे यानि पू
जकेभ्यः सद्योऽश्वमेधादिफलानि दत्ते ॥ तानि सर्वपापक्षयहेतुभूता प्रदक्षिणानि तव परितः करोमि ॥ ६१ ॥ र
क्तोत्पलारक्तलताप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशांकिताभ्यां ॥ अशेषवृंदारकवंदिताभ्यां नमो भवा
नीपदपंकजाभ्यां ॥ ६२ ॥ चरणनलिनयुग्मं पंकजैः पूजयित्वा कनककमलमालां कंठदेशेर्पयित्वा ॥
शिरसि विनिहितोयं रत्नपुष्पांजलिस्ते हृदयकमलमध्ये देवि हर्षं तनोतु ॥ ६३ ॥ अथ मातरुशीरवा
सितं निजतांबूलरसेन रंजितं ॥ तपनीयमये हि पट्टके मुखगंडूषजलं निधीयतां ॥ ६४ ॥ अथ मणिमयमं

चकासिते मे घृतिमविप्रपुष्पवितानराजमाने ॥ प्रसरद्गुरुधूपधूपितेस्मिन् भगवति वासगेहे स्तु तेन
निवासः ॥ ६५ ॥ तस्मिन्मणिखचिते सुवर्णपीठे लोकाभयकरे निःस्वपादे ॥ विस्तीर्णे मृदुतरोत्त
रछदेस्मिन् पर्यंके कनकमये निषीद मातः ॥ ६६ ॥ तव देवि सरोजचिह्नयोः पदयोर्निर्जितपद्मरागयोः ॥ अति
रक्ततरैरलक्तकैः पुनरुक्तां रचयामि रक्ततां ॥ ६७ ॥ स्वरतामथ जगदम्ब मंबके किमहं तु तरं मूलिकयाविरा
जमानेन ॥ अति रहसि मुक्तशिखेन साई सुरवरपनेकृतविद्रिस्मरं ॥ ६८ ॥ मुक्ताकुंदेंदुगौरां मणिमय
मुकुटां रत्नताटंकयुक्तामक्षस्रक्पुष्पहस्तामभयवरकरां चन्द्रचूडां त्रिनेत्रां ॥ नानालंकारयुक्तां सु
रमुकुटमणिद्योतितस्वर्णपीठां सानंदां सुप्रसन्नां त्रिभुवनजननीं चेतसा चिंतयामि ॥ ६९ ॥ एषा
भक्त्या तव विरचिता या मया देवि पूजा स्वीकृत्यैनां सपदि सकलान्मे पराधान्क्षमस्व ॥ न्यूनं यत्तत्तव क
रुणया पूर्णतामेतु सद्यः सानंदं मे हृदयकमले ते स्तु नित्यं निवासः ॥ ७० ॥ पूजामिमां पठेत्प्रातः पूजां क
र्तुमनीश्वरः ॥ पूजाफलमवाप्नोति वांछितार्थं च विंदति ॥ ७१ ॥ प्रत्यहं भक्तिसंयुक्तो यः पूजनमिदं पठे
त् ॥ वाग्वादिन्याः प्रसादेन स स्यात्स कविर्भविता ॥ ७२ ॥ ॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमच्छं